**प्रश्नः ४२– कर्मधारय समासे किं भवति?**

**उत्तरम्–** विशेष्य विशेषण शब्दयोः परस्परं समासो भवति।

**प्रश्नः ४३– कर्मधारय समासस्यापरं नाम किम्?**

**उत्तरम्–** समानाधिकरण तत्पुरुष समासः।

**प्रश्नः ४४– द्विगु समासः कदा भवति?**

**उत्तरम्–** यदि विशेषणवाचकः शब्दः संख्यावाचको भवति तदाद्विगु समासो भवति।

**प्रश्नः ४५– द्विगु समासस्य कुत्रान्तर्भावो भवति?**

**उत्तरम्–** कर्मधारय समासे।

**प्रश्नः ४६– प्रादितत्पुरुषस्य किं लक्षणम्?**

**उत्तरम्–** तत्पुरुष समासे येषां पदानामादौ प्रादि पदानि प्रादितत्पुरुष शब्देनाभिधीयन्ते।

**प्रश्नः ४७– गति तत्पुरुषे किं भवति?**

**उत्तरम्–** गतिसंज्ञकशब्दानां समर्थ सुबन्तेन सह समासः गतितत्पुरुष इत्यभिधीयते।

**प्रश्नः ४८– को नामोपपदसमासः?**

**उत्तरम्–** उपपदसुबन्तस्य समर्थ सुबन्तेन सह समासः उपपदसमासः।

**प्रश्नः ४९– उपपदपदानां केन रूपेण व्यवहारो भवति?**

**उत्तरम्–** उपपदपदानि विशेषण रूपेण क्रिया विशेषण रूपेण वाप्रयुज्यन्ते।

**प्रश्नः ५०– निम्नांकितानां समस्त पदानां विग्रहं लिखन्तु?**

**(१) शंकुला खण्डः, (२) धान्यार्थः,(३) मासपूर्वः, (४) पितृसमः, (५) गुडमिश्रः, (६) मासावरः, (७) वातच्छेद्यम, (८) यूपदारु, (९) भूतबलिः, (१० गोहितम्,) (११) राजपुरुषः, (१२) त्रिभुवनम्, (१३) मध्याह्नः, (१४) सायाह्नः, (१५) द्वितीयभिक्षा, (१६) प्राप्तजीविकः, (१७ ) अक्षशौण्डः, (१८) आतपशुष्कः, (१९) सर्वयाज्ञिकाः, (२०) पुराणमीमांसकाः, (२१) पञ्चगवम्, (२२) घनश्यामः, (२३) नीलोत्पलम्, (२४) श्रेणीकृताः, (२५) शाकपार्थिवः, (२६) किं राजा, (२७) महानवमी, (२८) पाचकस्त्री, (२९) कठाध्यापकः, (३०) गोमचर्चिक, (३१) मयूरव्यंसकः, (३२) अकिञ्चनः, (३३) शुक्लीकृत्य, (३४) अवकोकिलः, (३५) निष्कौशाम्बि, (३६)**

कुम्भकार:, (३७) अश्वक्रीती, (३८) परमराज:, (३९) संख्याताह्न:, (४०) द्विखारम्, (४१) अष्टाकपाल:।

उत्तरम्–

(१) शंकुला खण्ड: = शंकुलयाखण्ड: = शंकुलाखण्ड:।

(२) धान्यार्थ: = धान्येनार्थ: = धान्यार्थ:।

(३) मासपूर्व: = मासेन पूर्व: = मासपूर्व:।

(४) पितृसम: = पित्रा सम: = पितृसम:।

(५) गुडमिश्र: = गुडेन मिश्र: = गुडमिश्र:।

(६) मासावर: = मासे नावर: = मासावर:।

(७) वातच्छेद्यमं = वातेन छेद्यम् = वातच्छेद्यम्।

(८) यूपदारु = यूपाय दारु = यूपदारु।

(९) भूतबलि: = भूतेभ्यो वलि: = भूतबलि।

(१०) गोहितम् = गोभ्यो हितम् = गोहितम्।

(११) राजपुरुष: = राज्ञ: पुरुष: = राजपुरुष:।

(१२) त्रिभुवनम् = त्रयाणां भुवनानां समाहार: = त्रिभुवनम्।

(१३) मध्याह्न: = अह्नो मध्यम् = मध्याह्न:।

(१४) सायाह्न: = अह्न: साये = सायाह्न:।

(१५) द्वितीयभिक्षा = द्वितीयं भिक्षाया: = द्वितीयभिक्षा।

(१६) प्राप्तजीविक: = प्राप्तो जीविकाम् = प्राप्तजीविक:।

(१७ ) अक्षशौण्ड: = अक्षेषु शौण्ड: = अक्षशौण्ड:।

(१८) आतपशुष्क: = आतपे शुष्क: = आतपशुष्क:।

(१९) सर्वयाज्ञिका: = सर्वे च ते याज्ञिकाश्च = सर्वयाज्ञिका:।

(२०) पुराणमीमांसका: = पुराणाश्च ते मीमांसकाश्च = पुराणमीमांसका:।

(२१) पञ्चगवम् = पञ्चानां गवां समाहार: = पञ्चगवम्।

(२२) घनश्याम: = घन इव श्याम: = घनश्याम:।

(२३) नीलोत्पलम् = नीलं च तदुत्पलम् = नीलोत्पलम्।

(२४) श्रेणीकृता: = अश्रेणय: श्रेणय: कृता: = श्रेणीकृता:।

(२५) शाकपार्थिव: = शाकप्रिय: पार्थिव: = शाकपार्थिव:।

(२६) किंराज = कुत्सितो राजा = किं राजः।

(२७) महानवमी = महती चासौ नवमी = महानवमी।

(२८) पाचकस्त्री = पाचिका चा सौ स्त्री च = पाचकस्त्री।

(२९) कठाध्यापकः = अध्यापकश्चासौ कठश्च = कठाध्यापकः।

(३०) गोमचर्चिक = मचर्चिका चासौ गौश्च = गोमचर्चिका।

(३१) मयूरव्यंसकः = मयूरो व्यंसकः = मयूर व्यंसः।

(३२) अकिञ्चनः = नास्ति किञ्चनयस्य सः= अकिञ्चनः।

(३३) शुक्लीकृत्य = अशुक्लं शुक्लं कृत्वा = शुक्लीकृत्य।

(३४) अवकोकिलः = कोकिलया अवक्रुष्टः = अवकोकिलः।

(३५) निष्कौशाम्बि = कौशाम्व्या निष्क्रान्तः निष्कौशाम्बि।

(३६) कुम्भकारः = कुम्भं करोति = कुम्भकारः।

(३७) अश्वक्रीती = अश्वेन क्रीता = अश्वक्रीती।

(३८) परमराजः = परमश्चासौ राजा = परमराजः।

(३९) संख्याताह्नः = संख्यातमहः =संख्याताह्नः।

(४०) द्विखारम् = द्वयोः खार्योः समाहारः = द्विखारम्।

(४१) अष्टाकपालः = अष्टसु कपालेषु संस्कृतः पुरोडाशः = अष्टाकपालः।

**प्रश्नः ५१— बहुब्रीहेः किं लक्षणम्?**

**उत्तरम्—** अन्यपदार्थ प्रधानो बहुब्रीहिः।

**प्रश्नः ५२— बहुब्रीहि समासस्य कत्यवान्तरभेदाः भवन्ति?**

**उत्तरम्—** चत्वारः।

**प्रश्नः ५३— बहुब्रीहि समासस्य के चत्वार अवान्तरभेदाः सन्ति?**

**उत्तरम्—** (१) व्यधिकरणबहुब्रीहिः, (२) समानाधिकरणबहुब्रीहिः, (३) तुल्ययोग बहुब्रीहिः, (४) व्यतिहारबहुब्रीहिश्च।

**प्रश्नः ५४— कुत्र भवति समानाधिकरण बहुब्रीहिः?**

**उत्तरम्—** यत्र समासघटकानि सर्वाणि पदानि समानविभक्तिकानि भवन्ति तत्र भवति समानाधिकरण बहुब्रीहिः। यथा— निर्गतं भयं यस्मात् सः = निर्गतभयः पुरुषः।

**प्रश्नः ५५— कुत्र भवति व्यधिकरण बहुब्रीहिः?**

**उत्तरम्—** यत्र सम।सघटकानि पदानि भिन्न विभक्तिकानि भवन्ति तत्र भवति व्यधिकरण बहुब्रीहिः। यथा— धनुः पाणौ यस्य सः = धनुष्पाणिः पुरुषः।

**प्रश्नः ५६– कुत्र भवति तुल्ययोगबहुब्रीहिः?**

**उत्तरम्–** यत्र समानयोग सूचकस्य पदस्य प्रयोगो भवति समासे तत्र भवति तुल्ययोग बहुब्रीहिः। यथा पुत्रेणसह आगतः = सपुत्रः पिता।

**प्रश्नः ५७– कुत्र भवति कर्मव्यतिहारो बहुबीहिः?**

**उत्तरम्–** यत्र अन्यसंबन्धिनीं क्रियामन्यः करोति, इतरसंबन्धिनीं च इतरः स कर्मव्यतिहारः। यथा = केशेषु केशेषु गृहित्वा इदं युद्धं प्रवृत्तम् = केशाकेशि।

**प्रश्नः ५८– निम्नांकितानां सिद्धं रूपं लिखत?**

**(१) प्राप्तमुदकं यं सः, (२) ऊढो रथो येन सः, (३) उपहृतः पशुः यस्मै सः, (४)वीराः पुरुषाः यस्मिन् सः, (५) अविद्यमानः पुत्रो यस्य सः, (६) कण्ठेस्थः कालो यस्य सः, (७) उष्ट्रमुखमिव मुखं यस्य सः, (८) केशानां संघातश्चूडा यस्य सः, (९) चित्रा जरती गौर्यस्य सः, (१०) पाचिका भार्या यस्य सः, (११) स्रौघ्नी भार्या यस्य सः, (१२) हैमीमुद्रिका यस्य सः, (१३) पट्वीभार्या यस्य सः, (१४) दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तम्, (१५) दीर्घे सक्थिनी यस्य सः, (१६) पञ्चाङ्गुलयोयस्य तत्, (१७) द्वौ मूर्धानौ यस्य सः, (१८) अन्तर्लोमानि यस्य सः, (१९) शोभनं दिवा अस्य, (२०) सोम एवं जम्भं यस्य सः, (२१) पतिता जम्भाः यस्य सः, (२२) दुम्भस्येव पादौ यस्याः सा, (२३) चत्वारो दन्ता यस्य सः, (२४) षड् दन्ता यस्य सः, (२५) सु = शोभनं हृदयं यस्य सः, (२६) बहवो वाग्मिनो यस्यां सा।**

**उत्तरम्–**

(१) प्राप्तमुदकं यं सः = प्राप्तोदको ग्रामः।

(२) ऊढो रथो येन सः = ऊढरथोऽनड्वान्।

(३) उपहृतः पशुः यस्मै सः = उपहृत पशू रुद्रः।

(४) वीराः पुरुषाः यस्मिन् सः = वीरपुरुषको ग्रामः।

(५) अविद्यमानः पुत्रो यस्य सः = अपुत्रः पुरुषः।

(६) कण्ठेस्थः कालो यस्य सः = कण्ठेकालः।

(७) उष्ट्रमुखमिव मुखं यस्य सः = उष्ट्रमुखः।

(८) केशानां संघातश्चूडा यस्य सः = केशचूडः।

(९) चित्रा जरती गौर्यस्य सः = चित्राजरतीगुः।

(१०) पाचिका भार्या यस्य सः = पाचिकाभार्यः।

(११) पाका भार्या यस्य सः = पाकभार्याः।

(१२) स्त्रौघ्नी भार्या यस्य सः = स्त्रौघ्नी भार्यः।

(१३) हैमीमुद्रिका यस्य सः = हैममुद्रिकः।

(१४) पट्वीभार्या यस्य सः = पटुभार्यः।

(१५) दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तम् = दण्डादण्डि।

(१६) दीर्घे सक्थिनी यस्य सः = दीर्घसक्थः।

(१७) पञ्चाङ्गुलयोयस्य तत् = पञ्चागुलं दारु।

(१८) द्वौ मूर्धानौ यस्य सः = द्विमूर्धः।

(१९) अन्तार्लोमानि यस्य सः = अन्तार्लोमः।

(२०) शोभनं दिवा अस्य = सुदिवः।

(२१) सोम एवं जम्भं यस्य सः = सोमजम्भः।

(२२) पतिता जम्भाः यस्य सः = पतितजम्भः।

(२३) कुम्भस्येव पादौ यस्याः सा = कुम्भपदी।

(२४) चत्वारो दन्ता यस्य सः = चतुर्दन्।

(२५) षड् दन्तायस्य सः = षोडन्।

(२६) सु = शोभनं हृदयं यस्य सः = सुहृदयः पुरुषः।

(२७) बहवो वाग्मिनो यस्यां सा = बहुवाग्मिका नगरी।

**प्रश्नः ५९– द्वन्द्व समासे कस्य पदार्थस्य प्राधान्यं भवति?**

**उत्तरम्–** उभयोः पदार्थयोः।

**प्रश्नः ६०– द्वन्द्वसमासस्य किं लक्षणम्?**

**उत्तरम्–** अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः।

**प्रश्नः ६१– द्वन्द्व समासे कति चार्थाः?**

**उत्तरम्–** चत्वारः।

**प्रश्नः ६२– द्वन्द्व समासस्य के चत्वारश्चार्थाः सन्ति?**

**उत्तरम्–** समुच्चयः, (२) अन्वाचयः, (३) इतरेतर योगः, (४) समाहारश्च।

**प्रश्नः ६३– को नाम समुच्चयः?**

**उत्तरम्–** परस्परनिरपेक्षस्यानेकस्यैकस्मिन् अन्वयः समुच्चयः।

**प्रश्नः ६४– को नमान्वाचयः?**

**उत्तरम्–** अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः।

**प्रश्नः ६५– कश्चार्थ इतरेतर योगः?**

**उत्तरम्–** मिलितानामन्वये इतरेतरयोगः।

**प्रश्नः ६६– को नाम समाहारः?**

**उत्तरम्–** समूहः समाहारः।

**प्रश्नः ६७– कति विधा वृत्तयः?**

**उत्तरम्–** पञ्च वृत्तयः।

**प्रश्नः ६८– का पञ्च वृत्तयः सन्ति?**

**उत्तरम्–** कृदन्ताः, तद्धितघटिताः, समासा एकशेषाः सनादि प्रत्ययान्ता धातवः च।

**प्रश्नः ६९– समासः कतिविधः?**

**उत्तरम्–** षड्विधः समासः।

**प्रश्नः ७०– समासस्य के षड्भेदाः?**

**उत्तरम्–** (१) सुपांसुबन्तेन सह समासः, (२) सुपां तिङन्तेन सह समासः, (३) सुपां प्रातिपदिकेन समासः, (४) सुपां धातुना सह समासः, (५) तिङाम् तिङन्तेन सह समासः, (६) तिङ्गां सुबन्तेन च सह समासः।

**प्रश्नः ७१– सुपांसुबन्तेन सह समासस्य किमुदाहरणम्?**

**उत्तरम्–** राजपुरुषः।

**प्रश्नः ७२– सुपां तिङन्तेन सह समासस्य किमुदाहरणम्?**

**उत्तरम्–** पर्यभूषयत्।

**प्रश्नः ७३– सुपां प्रातिपदिकेन सह समासस्य किमुदाहरणम्?**

**उत्तरम्–** कुम्भकारः।

**प्रश्नः ७४– सुपां धातुना सह समासस्य किमुदाहरणम्?**

**उत्तरम्–** कटप्रूः अथवा अजस्रम्।

**प्रश्नः ७५– तिङां सुबन्तेन सह समासस्य किमुदाहरणम्?**

**उत्तरम्– कृन्त विचक्षणा।**

**प्रश्नः ७६– निम्नांकितानां समासान्त प्रत्ययान् विग्रहांश्च लिखन्तु?**

**(१) दीपम्, (२) अन्तरीपम्, (३) समीपम्, (४) अनूपः, (५) सन्तमसम्, (६) अनुरहसम्।**

**उत्तरम्–**

**(१) दीपम्–** द्वयोः गता आपो यस्मिन् तत् = द्वीपम् = द्वि + अप : समासान्तः अः अपः अकारस्य इकारः = दीर्घश्च = द्वीपम्।

**(२) अन्तरीपम्–** अन्तर्गताः आपो यस्मिन् तत् = अन्तरीपम् = अन्तर् + अप्+ समासान्त अः = अपः अकारस्येकारः = अन्तरीपम्।

**(३) समीपम्–** संगता आपो यस्मिन् तत् = समीपम् = सम् + अप् > ई + अ+ सु > अम्।

**(४) अनूपः–** अनु + अप् > ऊप् + अ = अनूपोदेशः = अनुगता आपो यस्मिन् सः।

**(५) सन्तमसम्–** सन्ततं तमः = सन् + तमस् + अच् + स >अम् = सनतमसम्।

**(६) अनुरहसम्–** अनुगतं रहः = अनु + रहस् + अच् + सु > अम् = अनुरहसम्।

**प्रश्नः ७८– कृत्तद्धित प्रत्ययोः को भेदः मुख्यः?**

**उत्तरम्–** कृत् प्रत्ययाः धातुभ्यो विधीयन्ते किन्तु तद्धितप्रत्ययाः प्रातिपदिकेभ्यो विधीयन्ते।

**प्रश्नः ७९– उपगोरपत्यमित्यस्मिन्नर्थे किं रूपं भवति?**

**उत्तरम्–** औपगवः।

**प्रश्नः ८०– अश्वपतेरपत्यमित्यस्मिन्नर्थे किं रूपम्?**

**उत्तरम्–** आश्वपतम्।

**प्रश्नः ८१– देवस्यापत्यादि इति अर्थे किं रूपम्?**

**उत्तरम्–** दैव्यम् दैवम् वा।

**प्रश्नः ८२– दितेरपत्यमित्यर्थे किं रूपम्?**

**उत्तरम्–** दैत्यः।

**प्रश्नः ८३– पुंसः अपत्यमित्यर्थे किं रूपम्?**

**उत्तरम्–**पौंसनः।

**प्रश्नः ८४– पञ्चसुकपालेषु संस्कृतः इत्यर्थे किं रूपम्?**

**उत्तरम्–** पञ्चकपालः।

**प्रश्नः ८५— दक्षस्य गोत्रापत्यम् इत्यर्थे किं रूपम्-**

**उत्तरम्—** दाक्षिः।

**प्रश्नः ८६— दाक्षेः युवाषत्यमित्यस्मिन्नर्थे किं रूपम्?**

**उत्तरम्—** दाक्षायणः।

**प्रश्नः ८७— कात्यायनस्य छात्राः इत्यस्मिन्नर्थे किं रूपम्?**

**उत्तरम्—** कातीयाः।

**प्रश्नः ८८— यास्कस्य युवापत्यम् इत्यर्थे किं रूपम्?**

**उत्तरम्—** यास्कायनिः।

**प्रश्नः ८९— स्त्रियाः अपत्यमित्यर्थे किं रूपम्?**

**उत्तरम्—** स्त्रैणः।

**प्रश्नः ९०— व्यासस्यापत्यमित्यर्थे किं रूपम्?**

**उत्तरम्—** वैयासिकिः।

**प्रश्नः ९१— वरुडस्यापत्यमित्यर्थे किं रूपम्?**

**उत्तरम्—** वारुडेकिः।

**प्रश्नः ९२— उदुम्बराणां राजा अपत्यं वा इत्यस्मिन्नर्थे किं रूपम्?**

**उत्तरम्—** औदुम्बरिः।

**प्रश्नः ९३— कषायेण रक्तं वस्त्रम् इत्यर्थे किं रूपम्?**

**उत्तरम्—** काषायम्।

**प्रश्नः ९४— लक्षया रक्तः इत्यर्थे किं रूपम्?**

**उत्तरम्—** लाक्षिकः।

**प्रश्नः ९५— कर्दमेन रक्त इत्यर्थे किं रूपम्?**

**उत्तरम्—** कार्दमिकः।

**प्रश्नः ९६— पुष्येण युक्तमहः इत्यर्थे किं रूपम्?**

**उत्तरम्—** पौषम्।

**प्रश्नः ९७— पुष्ययुक्ता पूर्णमासी इत्यर्थे किं रूपम्?**

**उत्तरम्—** पौषी।

**प्रश्नः ९८— वसिष्ठेन दृष्टसाम् इत्यर्थे किं रूपम्?**

**उत्तरम्—** वासिष्ठं साम।

प्रश्न: ९९— वामदेवेन दृष्टं साम इत्यर्थे किं रूपम्?

उत्तरम्— वामदेव्यम्।

प्रश्न: १००— दध्नि संस्कृतमित्यर्थे किं रूपम्?

उत्तरम्— दाधिकम्।

प्रश्न: १०१— आशिषा चरतीत्यर्थे किं रूपम्?

उत्तरम्— आशिष्क:।

प्रश्न: १०२— यस्या ऊर्ध्वं संवत्सरस्यारम्भ: सा पौर्णमासी किं नामा?

उत्तरम्— आग्रहायणी।

प्रश्न: १०३— पशुपतिर्देवता अस्येत्यर्थे किं रूपम्?

उत्तरम्— पाशुपतम्।

प्रश्न: १०४— श्रवणा पौर्णमासी अस्मिन् मासे इत्यर्थे किं रूपम्?

उत्तरम्— श्रावणिक:।

प्रश्न: १०५— श्रीर्देवता अस्य इत्यर्थे किं रूपम्?

उत्तरम्— श्रायम्।

प्रश्न: १०६— पैङ्गाक्षीपुत्रीयमिति पदस्य को विग्रह:?

उत्तरम्— पैङ्गाक्षी पुत्रो देवता अस्य।

प्रश्न: १०७— तार्णबिन्दवीयमिति पदस्य को विग्रह:?

उत्तरम्— तार्णविन्दु: देवता अस्य।

प्रश्न: १०८— काकानां समूह इत्यर्थे किं रूपम्?

उत्तरम्— काकम्।

प्रश्न: १०९— वकानां समूह इत्यर्थे किं रूपम्?

उत्तरम्— वाकम्।

प्रश्न: ११०— भिक्षाणां समूह इत्यर्थे किं रूपम्?

उत्तरम्— भैक्षम्।

प्रश्न: १११— गार्भिणम् पदस्य को विग्रह:?

उत्तरम्— गर्भिणीनां समूह:।

प्रश्न: ११२— युवतीनां समूह इत्यर्थे किं रूपम्?

उत्तरम्— यौवनम्।

**प्रश्नः ११३— औष्ट्रकम् पदस्य कोऽर्थः?**

**उत्तरम्—** उष्ट्राणां समूहः।

**प्रश्नः ११४— राजन्यकम् पदस्य कोऽर्थः?**

**उत्तरम्—** राजन्यानां समूहः।

**प्रश्नः ११५— कैदार्यम् पदस्य कोऽर्थः?**

**उत्तरम्—** केदाराणां समूहः।

**प्रश्नः ११६— गाणिक्यम् पदस्य कोऽर्थः?**

**उत्तरम्—** गणिकानां समूहः।

**प्रश्नः ११७— ब्राह्मण्यम् पदस्य कोऽर्थः?**

**उत्तरम्—** ब्राह्मणानां समूहः।

**प्रश्नः ११८— सामवेदे पृष्ठसंज्ञकानि कति स्तोत्राणि सन्तिः?**

**उत्तरम्—** षट् संख्याकानि।

**प्रश्नः ११९— कानि षट् पृष्ठ संज्ञकानि सामवेदीयानि स्तोत्राणि सन्ति?**

**उत्तरम्—** रथन्तरम्, वृहद् वैरूपम्, वैराजः शाक्वरम् रैवतञ्च।

**प्रश्नः १२०— ग्रामाणां समूह इत्यस्मिन्नर्थे किं रूपम्?**

**उत्तरम्—** ग्रामता।

**प्रश्नः १२१— बन्धूनां समूह इत्यस्मिन्नर्थे किं रूपम्?**

**उत्तरम्—** बन्धुता।

**प्रश्नः १२२— केशानां समूह इत्यस्मिन्नर्थे किं रूपम्?**

**उत्तरम्—** कैशिकम् कैश्यम् वा।

**प्रश्नः १२३— पाश्या पदस्य कोऽर्थः?**

**उत्तरम्—** पाशानां समूहः।

**प्रश्नः १२४— तृण्या पदस्य कोऽर्थः?**

**उत्तरम्—** तृणानां समूहः।

**प्रश्नः १२५— वन्या पदस्य कोऽर्थः?**

**उत्तरम्—** वनानां समूहः।

**प्रश्नः १२६— खल्या पदस्य कोऽर्थः?**

**उत्तरम्—** खलानां समूहः।

**प्रश्नः १२७— गव्या पदस्य कोऽर्थः?**

उत्तरम्— गवां समूह।

**प्रश्नः १२८— रथकट्या पदस्य कोऽर्थः?**

उत्तरम्— रथानां समूहः।

**प्रश्नः १२९— डाकिनी पदस्य कोऽर्थः?**

उत्तरम्— डाकानां समूहः।

**प्रश्नः १३०— ऐषुकारिभक्तम् पदस्य कोऽर्थः?**

उत्तरम्— ऐशुकारीणां विषयो देशः।

**प्रश्नः १३१— पाङ्क्तः प्रगाथः पदस्य कोऽर्थः?**

उत्तरम्— पंक्तिच्छन्दस्का ऋक् आदिः यस्य प्रगाथस्य।

**प्रश्नः १३२— को नाम पांक्तः प्रगाथः?**

उत्तरम्— पंक्तिच्छन्दस्का ऋक् आदिर्यस्य प्रगाथस्य सः पांक्त प्रगाथः।

**प्रश्नः १३३— श्यैनम्पाता पदस्य कोऽर्थः?**

उत्तरम्— श्येनपातो अस्यां क्रीडायां वर्तते।

**प्रश्नः १३४— वायसविधिकः पदस्य कोऽर्थः?**

उत्तरम्— काकविद्यायाः अथवा पक्षिविद्याया अध्येता।

**प्रश्नः १३५— पूर्वपदिकः पदस्य कोऽर्थः?**

उत्तरम्— पूर्वपदमधीते वेदवा।

**प्रश्नः १३६— चातुरार्थिक पदस्य कोऽर्थः?**

उत्तरम्— चतुर्णां सूत्राणामर्थाः चतुरर्थाः तत्र भवः =चातुरर्थिकः।

अथवा— चतुर्णामर्थानां समाहारः चतुरर्थी तत्र भवा चातुरार्थिकाः।

**प्रश्नः १३७— औदुम्बरः पदस्य कोऽर्थः?**

उत्तरम्— उदुम्बराः सन्ति अस्मिन् देशे।

**प्रश्नः १३८— कौशाम्बी पदस्य कीदृशो विग्रहः ?**

उत्तरम्— कुशाम्बेन निर्मिता नगरी।

**प्रश्नः १३९— वैदिशम् पदस्य कोऽर्थः?**

उत्तरम्— विदिशाया अदूरभवम्।

**प्रश्नः १४०— अदूरभवश्चेति सूत्रे चकारेण के प्रागुक्ताः त्रयोऽर्थाः?**

**उत्तरम्**— (१) देशः, (२) निवृतम्, (३) निवासश्च।

**प्रश्नः १४१— चातुरार्थिक प्रत्ययेभ्यः प्राक् के त्रयोऽर्थाउक्ताः?**

**उत्तरम्**— देशरूपार्थः, निर्वृतरूपार्थः, निवासरूपार्थश्च।

**प्रश्नः १४२— सैध्रकावतम् पदस्य कोऽर्थः?**

**उत्तरम्**— सिध्रकावानस्मिन्नस्ति।

**प्रश्नः १४३— दैर्धवरत्रःकूपः पदस्य कोऽर्थः?**

**उत्तरम्**— दीध्रवस्त्रेण निर्वृतः कूपः।

**प्रश्नः १४४— दात्तः कूपः पदस्य कोऽर्थः?**

**उत्तरम्**— दत्तेन निर्वृतः कूपः।

**प्रश्नः १४५— दत्तामित्रेणनिर्वृता नगरीत्यर्थे किं रूपम् ?**

**उत्तरम्**— दातामित्री नगरी।

**प्रश्नः १४६— अरीहणादिभ्यः कः चातुरार्थिकः प्रत्ययो भवति?**

**उत्तरम्**— अरीहणादिभ्यो वुत्र् = यथा आरीहणकम्।

**प्रश्नः १४७— कुशाश्वादिभ्यः कः प्रत्ययो भवति?**

**उत्तरम्**— कुशाश्वादिभ्यः – क्षण् यथा कर्शाश्वीयम्।

**प्रश्नः १४८— काशादिभ्यः कः प्रत्ययो भवति?**

**उत्तरम्**— काशादिभ्यः इल = यथा काशिलः।

**प्रश्नः १४९— अद्यतनपदार्थः कः ?**

**उत्तरम्**— अतीतायाः रात्रेः पश्चार्धेन आगामिन्या पूर्वार्धेन च सहितो दिवसः अद्यतनः।

**प्रश्नः १५०— का नाम चञ्चा ?**

**उत्तरम्**— तृणमयी प्रतिमा चञ्चा।

**प्रश्नः १५१— खलितकं वनानि पदस्य कोऽर्थः?**

**उत्तरम्**— खलितकस्य पर्वतस्यादूरभवानि वनानि।

**प्रश्नः १५२— शर्कराः सन्त्यस्मिन् देशे इत्यर्थे कति चातुरार्थिकप्रत्ययान्तानि रूपाणि भवन्ति। कानि च तानि?**

**उत्तरम्**— षट् रूपाणि— तथाहि— शर्करा, शार्करम्, शार्करिकम् शर्करीयम् शर्करिकम् शार्करकम् च।

## शैषिकादि-द्विरुक्तप्रक्रियान्तर्गतायाः

### लघु-अतिलघूत्तरीयाणि प्रश्नोत्तराणि

प्रश्नः १— निम्नांकितानां विग्रहं लिखत?

(१) चाक्षुषं रूपम्, (२) औपनिषदः पुरुष, (३) दार्षदाः सक्तवः, (४) चातुर्दशं रक्षः, (५) राष्ट्रियः, (६) अवारपारीणः, (७) कात्रेव्यकः, (८) नागरेयकः, (९) कौक्षेयकः, (१०) नादेयम्, (११) अपाच्यम्, (१२) अमात्यः, (१३) ततस्त्यः, (१४) नित्यः, (१५) आरण्याः सुमनसः, (१६) दूरेत्यः, (१७) पौर्वमद्रः, (१८) आपरपद्रः, (१९) माहिकिप्रस्थः, (२०) काण्वाः, (२१) प्रौष्ठीयाः, (२२) काशीया, (२३) भौजकट, (२४) भावत्कः, (२५) काम्पिलयकः, (२६) कालञ्जरकः, (२७) मुखतीयम्, (२८) कटपल्वलीयम्, (२९) यौष्माकीणः, (३०) आस्माकीणः, (३१) मामकीनः, (३२) त्वत्पुत्रः, (३३) सांवत्सरिकम्, (३४) पौनः' पुनिकः, (३५) शारदिकं श्राद्धम्, (३६) नैशिकम्, (३७) शौवस्तिकम्, (३८) ग्रैष्मम्, (३९) प्रावृषेण्यः, (४०) हैमन्तिकम्, (४१) वार्षिकम्, (४२) सायन्तनम्, (४३) प्रगेतनम्, (४४) परुत्लम्, (४५)मूलकः, (४६) आमावस्यः, (४७) औपजानुकः, (४८) औपनीविकः, (४९) वासन्त्यः, (५०) ग्रैष्मकम्, (५१) आवरसमकम्, (५२) दन्त्यम्, (५३) कण्ठ्या, (५४) ललाटिका, (५५) आग्निष्टोमिकः, (५६) माक्षिकम्, (५७) तिलमयम् (५८) ऐन्द्रायुधम् (५९) हारीतक्यः

उत्तरम्—

(१) चाक्षुषं रूपम् = चक्षुषा गृह्यते यत् तत् = चाक्षुषं रूपम्।

(२) औपनिषदः पुरुष = उपनिषद्भिः प्रतिपाद्यते औपनिषदः पुरुषः।

(३) दार्षदा: सक्तव: = दृषदिपिष्टा: = दार्षदा: सक्तव:।

(४) चातुर्दशं रक्ष: = चातुर्दश्यां दृश्यते इति चातुर्दशं रक्ष:।

(५) राष्ट्रिय: = राष्ट्रे भव: = राष्ट्रिय: पुरुष:।

(६) अवारपारीण: = अवारपारंगत: = अवारपारीण:।

(७) कात्रेसयक: = कुत्सिता: त्रय: कत्रय: तत्र भव: = कात्रेयक:।

(८) नागरेयक: = नगरे भव: = नागरेयक:।

(९) कौक्षेयक: = कुक्षि भव: = कौक्षेयक:।

(१०) नादेयम् = नद्यां भवम् = नादेयम्।

(११) अपाच्यम् = अपाचि भवम् = अपाच्यम्।

(१२) अमात्य: = अमा भव: = अमात्य:।

(१३) ततस्त्य: = तत आगत: = ततस्त्य:।

(१४) नित्य: = नितरां भव: = नित्य:।

(१५) आरण्या: सुमनस: = अरण्ये भवा: आरण्या: सुमनस:।

(१६) दूरेभ्य: = दूरादागत: दूरेभवोवा =दूरेत्य:।

(१७) पौर्वमद्र: = पूर्वेषु मद्रषु भव: = पौर्वमद्र:।

(१८) आपरमद्र: = अपरेषु मद्रेषु भव: = आपरमद्र:।

(१९) माहिक्रिप्रस्थ: = महिकि प्रस्थनाम्नि ग्रामे भव: = माहिकिप्रस्थ:।

(२०) काण्वा: = कण्वस्य छात्रा: = काण्वा:।

(२१) प्रौष्ठीया: = प्रोष्ठस्य गोत्रापत्यं प्रौष्ठि: तस्य छात्रा: = प्रोष्ठीया:।

(२२) काशीया = काशस्यं गोत्रापत्यं काशि: तस्य छात्रा: = काशीया:।

(२३) भौजकट = भोजकटे भव: = भौजकट:।

(२४) भावत्क: = भवत अयम् = भावत्क:।

(२५) काम्पिलयक: = काम्पिल्ये भव: = काम्पिल्यक:।

(२६) कालञ्जरक: = कालञ्जरेषु भव: = कालञ्जरक:।

(२७) मुखतीयम् = मुखतो जात: = मुखतीयम्।

(२८) कटपल्वलीयम् = कटपल्लवले जात: = कटपल्वलीयम्।

(२९) यौष्माकीण: = युवयो: युष्माकंवा अयम् = यौष्माकीण:।

(३०) आस्माकीण: = आवयो: अस्माकं वा अयम् = आस्माकीन:।

(३१) मामकीन: = मम अयम् = मामकीन:।

(३२) त्वत्पुत्र: = तव पुत्र: = त्वत् पुत्र:।

(३३) सांवत्सरिकम् = संवत्सरे भवम् = सांवत्सरिकम्।

(३४) पौन:' पुनिक: = पुन: पुनर्भव: = पौन: पुनिक:।

(३५) शारदिके श्राद्धम् = शरदि भवं श्राद्धम् = शारदिकं श्राद्धम्।

(३६) नैशिकम् = निशायां भवम् = नैशिकम् नैशं वा।

(३७) शौवस्तिकम् = श्वस् भवम् = शौवस्तिकम्।

(३८) ग्रैष्मम् = ग्रीष्मे भवम् = ग्रैष्मम्।

(३९) प्रावृषेण्य: = प्रावृषि भव: = प्रावृषेण्य:।

(४०) हैमन्तिकम् = हेमन्ते भवम् = हैमन्तिकम्।

(४१) वार्षिकम् = वर्षासु साधु = वार्षिकम्।

(४२) सायन्तनम् = सायं भवम् = सायन्तनम्।

(४३) प्रगेतनम् = प्रगे ज़ातम् = प्रगेतनम्।

(४४) परुत्नम् = परुद् भवम् = परुत्नम्।

(४५) मूलक: = मूले जात: = मूलक:।

(४६) प्रदोषक: = प्रदोषे जात: = प्रदोषक:।

(४६) आमावस्य: = अमावस्यायां जात: = आमावास्य:।

(४७) औपजानुक: = जानुनो: समीपमुपजानु तत्र प्रायेण भव: = औपजानुक:।

(४८) औपनीविक: = नीव्या: समीपमुपनीवि तत्र प्रायेण भव: = औपनीविक:।

(४९) वासन्त्य: = वसन्ते पुष्प्यन्तीति = वासन्त्य: लता:।

(५०) ग्रैष्मकम् = ग्रीष्मे देयम् ऋणम् = ग्रैष्मकम्।

(५१) आवरसमकम् = आवरासु समासु देयं ऋणम् = आवरसमकम्।

(५२) दन्त्यम् = दन्तेषु भवम् दन्त्यम्।

(५३) कण्ठ्यम् = कण्ठे भवम् = कण्ठ्यम्।

(५४) लालाटिका = ललाटे भवा = लालाटिका।

(५५) आग्निष्टोमिक: = अग्निष्टोमस्य व्याख्यान: तत्र भव: = आग्निष्टोमिक:।

(५६) माक्षिकम् = मक्षिकाभि: कृतम् = माक्षिकम्।

(५७) तिलमयम् = लितस्य विकार अवयवो वा = तिलमयम्।

(५८) ऐन्द्रायुधम् = इन्द्रायुधस्य विकार: अवयवो वा = ऐन्द्रायुधम्

(५९) हारीतक्य: = हरीतक्या: विकार: अवयवो वा = हारीतक्य।

**प्रश्न: २– शैषिक प्रकरणे के प्रत्यया: उक्ता:?**

**उत्तरम्–** चातुरार्थिक प्रकरणपर्यन्तं ये तद्धितप्रत्यया उक्ता तेभ्यो व्यतिरिक्ता:।

**प्रश्न:३– प्राग्दीव्यतीय प्रकरणे कीदृशा: प्रत्यया उक्ता:?**

**उत्तरम्–** विकारार्थका: प्रत्यया:।

**प्रश्न: ४– तस्यविकार: इति सूत्रस्य कोऽर्थ:?**

**उत्तरम्–** षष्ठी–समर्थ प्रातिपदिकेभ्यो सामान्या: विशेषाश्च प्रत्यया: स्यु:।

**प्रश्न: ५– को नाम विकार:?**

**उत्तरम्–** प्रकृति विकृति: = विकार:।

**प्रश्न: ६– का नाम प्रकृति–विकृति:?**

**उत्तरम्–** कारणस्य कार्यरूपेण परिणाम: प्रकृति विकृति रित्यभिधीयते।

**प्रश्न: ७– अश्मनोविकार इत्यर्थे किं रूपम्?**

**उत्तरम्–** आश्मन:।

**प्रश्न: ८– भस्मनो विकार इत्यर्थे किं रूपम्?**

**उत्तरम्–** भास्मन:।

**प्रश्न:९– मृत्तिकाया विकार इत्यर्थे किं रूपम्?**

**उत्तरम्–** मार्त्तिक:।

**प्रश्न: १०– वैल्वमिति पदस्य कोऽर्थ:?**

**उत्तरम्–** विल्वस्य विकार: अवयवो वा।

**प्रश्न: ११– दैवदारवम् पदस्य कोऽर्थ:?**

**उत्तरम्–** देवदारो: विकार: अवयवो वा।

**प्रश्न: १२– सुवर्णस्य विकार इत्यर्थे किं रूपम्?**

**उत्तरम्–** सौवर्णम्।

**प्रश्न: १३– प्राग्दीव्यतीय इति नामकरणस्य किं कारणम्?**

**उत्तरम्–** प्राग्दीव्यतीय इति नाम सूचयति यत् 'प्राग्दीव्यतोऽण्' सूत्रस्याधिकार:। तेन दीव्यति खनति जयति जितम् सूत्रपर्यन्तं यास्यति।

**प्रश्नः १४– प्राग्वहतीय नाम्नः किं कारणम्?**

**उत्तरम्–** प्राग्वहतीय नाम्ना सूच्यते यत् 'तद् वहति रथ युग प्रासङ्गम्' सूत्र पर्यन्तं ठक् प्रत्ययो भविष्यति।

**प्रश्नः १५– मा शब्दं कार्षीः इति य आह सः इत्यर्थे किं रूपम्?**

**उत्तरम्–** माशाब्दिकः।

**प्रश्नः १६– स्वगतमित्याह यः सः इत्यर्थे किं रूपम्?**

**उत्तरम्–** स्वागतिकः।

**प्रश्नः १– व्यवहारेण चरति यः इत्यर्थे किं रूपम्?**

**उत्तरम्–** व्यावहारिकः।

**प्रश्नः १७– परदारं गच्छती यः सः इत्यर्थे किं रूपम्?**

**उत्तरम्–** पारदारिकः।

**प्रश्नः १८– गुरुतल्पं गच्छति यः सः इत्यर्थे किं रूपम्?**

**उत्तरम्–** गौरुतल्पिकः।

**प्रश्नः १९– अभ्र्या खनति यः सः इत्यर्थे किं रूपम्?**

**उत्तरम्–** आभ्रिकः।

**प्रश्नः २०– उडुपेन तरति यः सः इत्यर्थे किं रूपम्?**

**उत्तरम्–** औडुपिक।

**प्रश्नः २१– नावा तरतियः सः इत्यर्थे किं रूपम्?**

**उत्तरम्–** नाविकः।

**प्रश्नः २२– बाहुभ्यां तरति या सा इत्यर्थे किं रूपम्?**

**उत्तरम्–** बाहुका।

**प्रश्नः २३– ठगाधिकारे कति सूत्राणि 'ष' इत् प्रत्ययानां स्वरूपं निरूपयन्ति?**

**उत्तरम्–** षट्सूत्राणि।

**प्रश्नः २४– ठागाधिकारे षित् प्रत्ययानां स्वरूप निरूपकाणि कानि षट् सूत्राणि सन्ति?**

**उत्तरम्–** (१) आकर्षात् ष्ठल्, (२) पर्पादिभ्यः ष्ठन्, (३) भस्त्रादिभ्यः ष्ठन्, (४) कुसीद्दशैकादशात् ष्ठन् ष्ठचौ (५) आवस्थात् ष्ठल्, (६) किसरादिभ्यः ष्ठन् च।

**प्रश्नः २५– वेतनेन जीवतीत्यर्थे किं रूपम्?**

**उत्तरम्–** वैतनिकः।

**प्रश्नः २६– धनुषा जीवतीत्यर्थे किं रूपम्?**

**उत्तरम्–** धानुष्कः।

**प्रश्नः २७– क्रयविक्रयाभ्यां जीवतियः सः इत्यर्थे किं रूपम्? कश्च प्रत्ययः?**

**उत्तरम्–** क्रयविक्रयकः = कः प्रत्ययः।

**प्रश्नः २८– विवधेन हरतियः सः इत्यस्मिन्नर्थे किं रूपम् कश्च प्रत्ययः?**

**उत्तरम्–** वैवधिकः = ठक् प्रत्ययः।

**प्रश्नः २९– श्मशाने अधीते यः सः इत्यर्थे किं रूपम् कश्च प्रत्ययः?**

**उत्तरम्–** श्माशानिकः = ठक् प्रत्ययः।

**प्रश्नः ३०– वांशकठिनिकः पदस्य को विग्रहः कश्च प्रत्ययः?**

**उत्तरम्–** वंशकठिने व्यवहरति। ठक् प्रत्ययः।

**प्रश्नः ३१– श्राणिकः पदस्य को विग्रहः कश्च प्रत्ययः?**

**उत्तरम्–** श्राणानि युक्तम् दीयते अस्यै– अत्र टिठन् प्रत्ययः।

**प्रश्नः ३२– प्राग्घितीय इतिनाम्नः कारणं निर्दिशत्?**

**उत्तरम्–** प्राग्घितीय प्रकरणे तेषामिव प्रत्ययानां निर्देशो विद्यते। ये प्रत्यया हितार्थकात् प्राग्भवन्ति।

**प्रश्नः ३३– हितार्थकात् प्राक् कस्य प्रत्ययस्याधिकारो भवति?**

**उत्तरम्–** पाग्घिताद्यत्। यत् प्रत्ययस्येत्यर्थः।

**प्रश्नः ३४– को नाम प्रासङ्गः?**

**उत्तरम्–** वत्सानां दमनकाले स्कन्धे यत्काष्ठमासज्यते स प्रासङ्गः।

**प्रश्नः ३५– प्रासङ्ग्यः पदस्य विग्रहम् प्रत्ययं च निरूपयत?**

**उत्तरम्–** प्रासङ्गं वहतीति प्रासङ्ग्यः। प्रासङ्ग + यत् = प्रासङ्ग्यः।

**प्रश्नः ३६– धौरेयः पदस्य प्रकृति प्रत्ययं निरूपयत्?**

**उत्तरम्–** धुर् + ढक् > एय आदिवृद्धिः = धौरेयः।

**प्रश्नः ३७– शाकटः पदस्य प्रकृति प्रत्ययोः निरूपणं कुरुत?**

**उत्तरम्–** शकट + अण् आदि अचः वृद्धिः = शाकटः।

**प्रश्नः ३८– पद्याः पदस्य विग्रहं प्रत्ययं च निरूपयन्तु?**

**उत्तरम्–** पादौ विध्यन्ति इति पद्याः। पद् + यत् = पद्य प्रथमा बहुवचने = पद्याः।

**प्रश्नः ३९– वश्यः पदस्य कोऽर्थः ? कश्चात्र प्रत्ययः?**

**उत्तरम्–** वशंगतः वश्यः परेच्छानुसारीत्यर्थः। वश् + यत् = वश्यः।

**प्रश्नः ४०— धर्म्यम् पदस्य कोऽर्थः कश्चात्र प्रत्ययः?**

**उत्तरम्—** धर्मेण लभ्यं धर्म्यम् अत्र धर्म + यत् = विष्यः।

**प्रश्नः ४१— विष्यः पदस्य कोऽर्थः कश्चात्र प्रत्ययः?**

**उत्तरम्—** विषेण वध्यः विष्यः। विष् + यत् = धर्म्यः।

**प्रश्नः ४२— समानोदरे शयितः इत्यस्मिन्नर्थे किं रूपम्?**

**उत्तरम्—** सोदर्यः समानोदर्यः वा।

**प्रश्नः ४३— नौवयोधर्म० इत्यादिकं सूत्रं समग्रं लिखत?**

**उत्तरम्—** नो वयो-धर्म-विष-मूल-मूल-सीता-तजुलाभ्यः तार्य-तुल्य-प्राप्य-वाध्य-आनाभ्य-सम-समित-सम्मितेषु।

**प्रश्नः ४४— तुल्यं पदार्थः कः?**

**उत्तरम्—** तुलया सम्मितं तुल्यम्।

**प्रश्नः ४५— शरण्यः पदस्य को विग्रहः?**

**उत्तरम्—** शरणे साधुः = शरण्यः।

**प्रश्नः ४६— विश्वजनीनः शब्दस्य कोऽर्थः?**

**उत्तरम्—** विश्वजने साधुः।

**प्रश्नः ४७— पारिषद्यः पदार्थः कः ?**

**उत्तरम्—** परिषदि साधुः।

**प्रश्नः ४८— प्राक् क्रीताच्छः इति सूत्रस्य कोऽर्थः?**

**उत्तरम्—** तेन क्रीतम् त्यतः प्राक् येषु सूत्रेषु अर्था एव निर्देक्ष्यन्ते न तु प्रत्ययाः तेषु छ इत्युपस्थितं भवति।

**प्रश्नः ४९— छयद्विधिप्रकरणमिति पदस्य कोऽर्थः?**

**उत्तरम्—** अस्मिन् प्रकरणे छ प्रत्ययो यत् प्रत्ययश्च विवेच्येते इत्यर्थः।

**प्रश्नः ५०— कम्बलीयः इत्यत्र कः प्रत्ययः?**

**उत्तरम्—** कम्बलशब्दात् संज्ञायाम् छ > ईय प्रत्ययः।

**प्रश्नः ५१— माष्यम् पदस्य कोऽर्थः?**

**उत्तरम्—** माषाय हितम् = माष्यम्।

**प्रश्नः ५२— ब्रह्मण्यम् पदस्य कोऽर्थः?**

**उत्तरम्—** ब्रह्मणे हितम् = ब्रह्मण्यम्।

**प्रश्नः ५३— आर्हीयप्रकरणे कीदृशाः पत्यया: भवन्ति?**

**उत्तरम्—** अर्हतीत्यर्थात् प्राक् ठगाधिकारो भविष्यति तेन क्रीतमित्यर्थे।

**प्रश्नः ५४— द्वैपारायणिकः पदस्य को विग्रहः?**

**उत्तरम्—** द्विपारायणं वर्तयति इति = द्वैपारायणिक।

**प्रश्नः ५५— शताच्च ठन् यतावशते इतिसूत्रस्य कोऽर्थः?**

**उत्तरम्—** आर्हीयेष्वर्थेषु शताट्ठन् य तौ स्तः नतु शतेऽर्थे।

**प्रश्नः ५६— साहस्रमिति पदस्य को विग्रहः कश्चात्र प्रत्ययः?**

**उत्तरम्—** सहस्रेण क्रीतम् = साहस्रम् = सहस्र + अण् = साहस्रम्।

**प्रश्नः ५७— पैतिकमिति पदस्य को विग्रहः कश्चात्र प्रत्ययः?**

**उत्तरम्—** पित्तस्य शमनं कोपनं वा = पैतिकम्।

पित्त + ठक् + स > अम् = पैतिकम्।

**प्रश्नः ५८— वास्निकः पदस्य को विग्रहः?**

**उत्तरम्—** वस्नं हरति वहति आवहति वा।

**प्रश्नः ५९— नवतिः पदस्य को विग्रहः?**

**उत्तरम्—** नवदशतः परिमाणमस्य = नवतिः।

**प्रश्नः ६०— संशयविषयो भूतोऽर्थः इत्यस्मिन्नर्थे किं रूपम्?**

**उत्तरम्—** सांशयिकः।

**प्रश्नः ६१— योजनं गच्छतीत्यर्थे किं रूपम्?**

**उत्तरम्—** योजनकिः।

**प्रश्नः ६२— द्वाभ्यां सुवर्णाभ्यां क्रीतम् = इत्यस्मिन्नर्थे किं रूपम्?**

**उत्तरम्—** द्वि सौवर्णिकम्।

**प्रश्नः ६३— व्युष्टादिभ्योऽण् इति सूत्रस्य कोऽर्थः?**

**उत्तरम्—** दीयते कार्यं वेत्यर्थे सप्तम्यन्तेभ्य व्युष्टादिभ्योण् स्यात्।

**प्रश्नः ६४— व्युष्टशब्दस्य कोऽर्थः?**

**उत्तरम्—** प्रभातः।

**प्रश्नः ६५— तेन तुल्यं क्रिया चेद्वतिः ? इति सूत्रस्य कोऽर्थः?**

**उत्तरम्—** तृतीयान्तात् तुल्यमित्यर्थे वति प्रत्ययः स्यात्। यत् तुल्यं सा चेति क्रियोत्यर्थः। तुल्या क्रियेत्यर्थे वतिः स्यादिति यावत्।

**प्रश्नः ६६– ब्राह्मण वत् अधीते इत्यत्र कः प्रत्ययः कश्चार्थः?**

**उत्तरम्**– ब्राह्मणेन तुल्यम् अधीते ब्राह्मण वत् अधीते। ब्राह्मण + वतिः = ब्राह्मणवत्।

**प्रश्नः ६७– गोत्वम् पदस्य को विग्रहः?**

**उत्तरम्**– गोर्भावो गोत्वम्।

**प्रश्नः ६८– स्त्रियः भावः इत्यस्मिन्नर्थे कति रूपाणि भवन्ति? कानि च?**

**उत्तरम्**– त्रीणिरूपाणि = स्त्रीत्वम्, स्त्रैणम् स्त्रीता च।

**प्रश्नः ६९– स्तेनस्य भावः कर्म वा इत्यस्मिन्नर्थे किं रूपम्?**

**उत्तरम्**– स्तेयम्।

**प्रश्नः ७०– भावकर्मार्थ प्रकरणे कीदृशः प्रत्ययाः भवन्ति?**

**उत्तरम्**– भावार्थकाः कर्मार्थिका वा।

**प्रश्नः ७१– चातुर्वर्ण्यम् पदस्य कोऽर्थः?**

**उत्तरम्**– चत्वारो वर्णा एव चातुर्वर्ण्यम्।

**प्रश्नः ७२– चतुरो वेदानधीते इत्यस्मिन्नर्थे किं रूपम्?**

**उत्तरम्**– चतुर्वेदः।

**प्रश्नः ७३– दूतस्य भावः कर्म वा इत्यस्मिन् अर्थे किं रूपम्?**

**उत्तरम्**– दूत्यम्।

**प्रश्नः ७४– राज्ञो भावः कर्म वा इत्यस्मिन अर्थे किं रूपम्?**

**उत्तरम्**– राज्यम्।

**प्रश्नः ७५– उद्गातुः भावः कर्म वा इत्यर्थे किं रूपम्?**

**उत्तरम्**– औद्गात्रम्।

**प्रश्नः ७६– मनोज्ञस्य भावः कर्म वा इत्यर्थे किं रूपम्?**

**उत्तरम्**– मनोज्ञकम्।

**प्रश्नः ७७– धान्यानां भवने क्षेत्रे खञ् इति सूत्रस्यार्थं लिखन्तु?**

**उत्तरम्**– धान्यवाचिभ्यः षष्ठ्यन्तेभ्यः भवने क्षेत्रेऽर्थे खञ् स्यात्।

**प्रश्नः ७८– मौद्गीनम् पदस्य कोऽर्थः?**

**उत्तरम्**– मुद्गानां भवनं क्षेत्रम्।

**प्रश्नः ७९– यवानां भवनं क्षेत्रम् इति विग्रहे किं रूपम्?**

**उत्तरम्**– यव्यम्।

**प्रश्न: ८०— यथामुखीन: पदस्य को विग्रह:?**

**उत्तरम्—** यथामुखं दर्शन:।

**प्रश्न: ८१— सर्वपत्रीण: पदस्य को विग्रह:?**

**उत्तरम्—** सर्वपत्राणि व्याप्नोति।

**प्रश्न: ८२— अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थे कति कानि च रूपाणि भवन्ति?**

**उत्तरम्—** अभ्यमित्रीय:, अभ्यमित्र्य: अभ्यमित्रीण: इति त्रीणि रूपाणि।

**प्रश्न: ८३— कर्मणि धरते पुरुष: इत्यर्थे किं रूपम्?**

**उत्तरम्—** कर्मठ:।

**प्रश्न: ८४— त्रिंशदधिका: अस्मिन्नित्यर्थे किं रूपम्?**

**उत्तरम्—** त्रिंशशतम्।

**प्रश्न: ८५— एकादशानां पूरण: इत्यर्थे किं रूपम्?**

**उत्तरम्—** एकादश:।

**प्रश्न: ८६— पञ्चानां पूरण: इत्यर्थे किं रूपम्?**

**उत्तरम्—** पञ्चम:।

**प्रश्न: ८७— द्वितीय: पदस्य कोऽर्थ:?**

**उत्तरम्—** द्वयो: पूरण:।

**प्रश्न: ८८— यावतीय: पदस्य कोऽर्थ:?**

**उत्तरम्—** यावतां पूरण:।

**प्रश्न: ८९— पार्श्वक: पदस्य कोऽर्थ:?**

**उत्तरम्—** अनृजुरुपाय: पार्श्वम् तेनान्विच्छति।

**प्रश्न: ९०— उत्क: पदस्य कोऽर्थ:?**

**उत्तरम्—** उत्कण्ठित:।

**प्रश्न: ९१— विषपुष्पैर्जनितो ज्वर: इत्यर्थे किं रूपम्?**

**उत्तरम्—** विषपुष्पको ज्वर:।

**प्रश्न: ९२— उष्णं कार्यमस्यज्वरस्य इत्यर्थे किं रूपम्?**

**उत्तरम्—** उष्णको ज्वर:।

**प्रश्न: ९३— बटका: प्रायेगान्नमस्यां पौर्णमास्याम् इत्यर्थे किं रूपम्?**

**उत्तरम्—** बटकिनी पूर्णिमा।

**प्रश्नः ९४— साक्षाद्द्रष्टरिसंज्ञायामिति सूत्रस्य कोऽर्थः?**

उत्तरम्— साक्षादित्यव्ययात् द्रष्टर्यर्थे इनिः स्यात्।

**प्रश्नः ९५— साक्षाद् द्रष्टा इत्यर्थे किं रूपम्?**

उत्तरम्— साक्षी।

**प्रश्नः ९६— को नाम साक्षी?**

उत्तरम्— यः कर्मणि स्वयं न व्याप्रियते, किन्तु कर्म क्रियमाणं पश्यति सोऽयं साक्षीत्युच्यते।

**प्रश्नः ९७— क्षेत्रीयस्य कोऽर्थः?**

उत्तरम्— शरीरान्तरे चिकित्स्यः।

**प्रश्नः ९८— मतुबादयः कतिष्वर्थेषु भवन्ति?**

उत्तरम्— सप्तसु अर्थेषु।

**प्रश्नः ९९— मतुबादीनां विषयभूताः के अर्थाः?**

उत्तरम्— भूमनिन्दा–प्रशंसासु नित्ययोगेऽतिशायने।

संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः।

**प्रश्नः १००— शुक्लो गुणोऽस्य पटस्यास्मिन्नर्थे किं रूपम्?**

उत्तरम्— शुक्लः पटः।

**प्रश्नः १०१— प्राज्ञः पदस्य कोऽर्थः?**

उत्तरम्— प्रज्ञा अस्ति अस्मिन्।

**प्रश्नः १०२— तपस्वी पदस्य को विग्रहः?**

उत्तरम्— तप अस्य विद्यते।

**प्रश्नः १०३— होमनीं पदस्य को विग्रहः?**

उत्तरम्— होमो विद्यते अस्याः।

**प्रश्नः १०४— धान्यं प्रयोजनमस्य इति विग्रहे किं रूपम्?**

उत्तरम्— धान्यार्थी।

**प्रश्नः १०५— तुन्दिलः पदस्य कोऽर्थः?**

उत्तरम्— तुन्दिः अस्यास्ति।

**प्रश्नः १०६— अहं शुभमोर्युस् इतिसूत्रस्य कोऽर्थः?**

उत्तरम्— अहं शुभम् अव्ययाभ्यां मत्वर्थे युस् स्यात्।

**प्रश्न: १०७– अहम् इति मान्तमव्ययं कस्मिन्नर्थे विद्यते?**

**उत्तरम्**– अहंकारे।

**प्रश्न: १०८– अहं युः पदस्य कोऽर्थः?**

**उत्तरम्**– अहंकारवान्।

**प्रश्न: १०९–शुभंयुः पदस्य कोऽर्थः?**

**उत्तरम्**– शुभान्वितः।

**प्रश्न: ११०– प्राग्दिशो विभक्तिः इति सूत्रस्य कोऽर्थः?**

**उत्तरम्**– दिक्छब्देभ्यः प्राक् स्वार्थिकाः प्रत्ययाः विभक्तिसंज्ञाः स्युः।

**प्रश्न: १११– निम्नांकितानां पदानामर्थं लिखन्तु–**

**कुतः, यतः, ततः, अतः, दूतः, अयुतः, बहुतः। कुत्र, कुह**

**उत्तरम्**–

कुतः = कस्मात्

यतः = यस्मात्

ततः = तस्मात्

अतः = एतस्मात्

इतः = अस्मात्

अयुतः = अयुष्मात्

बहुतः = बहुभ्यः

कुत्र = कस्मिन्

कुह = कस्मिन्।

**प्रश्न: ११२– निम्नांकितानां प्रत्यय निर्देशं कुरुत?**

**यर्हि, तर्हि, कदा, एतर्हि, पुरः, परतः, अवरस्तात्, दक्षिणेन, दक्षिणाहि, द्वैधम्, द्विधा, द्वैतीयिक, तार्तीयिकः, तृतीयः, षष्ठः।**

**उत्तरम्**–

यर्हि = यद् + र्हिल् = यर्हि।

तर्हि = तद् + र्हिल् = तर्हि।

कदा = किम् + दा = कदा।

एतर्हि = एतत् + र्हिल् = एतर्हि।

पुरः = पुर् + स् : पुरः।

परतः = पर + अतसुच् = परतः।

अवरस्तात् = अवर + अस्ताति = अवरस्तात्।

दक्षिणेन = दक्षिण + एनप् = दक्षिणेन।

दक्षिणाहि = दक्षिण + आहि =दक्षिणाहि।.

द्वैधम् = द्वि + धमुञ् = द्वैधम्।

द्विधा = द्वि + धा = द्विधा।

द्वैतीयिक = द्वितीय + ईकक् = द्वैतीयिक।

तार्तीयिकः = तृतीय + ईकक = तार्तीयिकः।

तृतीयः = त्रि + तीय = तृतीय।

षष्ठः = षष्ठ + कन् = षष्ठः।

**प्रश्नः ११३— प्रशंसायां रूपमितिसूत्रस्य कोऽर्थः?**

**उत्तरम्—** प्रशंसा विशिष्टे स्वार्थे वर्तमानात् तिङन्तात् सुबन्ताच्च रूपविति फलितम्।

**प्रश्नः ११४— प्रशस्तं पचतीत्यर्थे किं रूपम्?**

**उत्तरम्—** पचतिरूपम्।

**प्रश्नः ११५— प्रशस्तः पटुरित्यर्थे किं रूपम्?**

**उत्तरम्—** पटुरूपः।

**प्रश्नः ११६— ईषद् ऊनो विद्वान्नित्यर्थे किं रूपम्?**

**उत्तरम्—** विद्वत्कल्पः।

**प्रश्नः ११७— ईषदूनः पटुः इत्यर्थे किं रूपम्?**

**उत्तरम्—** पटुकल्पः।

**प्रश्नः ११८— स्वार्थिकानां प्रत्ययानां काः विशेषताः?**

**उत्तरम्—** स्वार्थिकप्रत्ययेषुस्तु अव्यवर्थ व्यतिरिक्तोऽर्थो ऽभिव्यज्यत नवा तत्र कोऽपि संघातार्थो भवति।

**प्रश्नः ११९— देवपथः पदस्य कोऽर्थः?**

**उत्तरम्—** देवानां पन्थाः।

**प्रश्नः १२०– मुख्यः पदस्य कोऽर्थः?**

**उत्तरम्–** मुखमिव।

**प्रश्नः १२१– कार्कीकः पदस्य कोऽर्थः?**

**उत्तरम्–** शुक्लाश्व इव मूल्यवान्।

**प्रश्नः १२२– त्रिगर्तषष्ठाः पदस्य कोऽर्थः?**

**उत्तरम्–** त्रिगर्तः षष्ठो वर्गो येषां ते।

**प्रश्नः १२३– अगार्ग्यः गार्ग्यः सम्पद्यमानो भवति इत्यर्थे किं रूपम्?**

**उत्तरम्–** गार्गीभवति।

**प्रश्नः १२४– शुचीभवति इतिवाक्यस्य कोऽर्थः?**

**उत्तरम्–** अशुचिः शुचिः सम्पद्यमानो भवति।

**प्रश्नः १२५– मात्रीकरोति इति वाक्यस्य कोऽर्थः?**

**उत्तरम्–** अमाता माता सम्पद्यते तं करोति।

**प्रश्नः १२६– ऊरूकरोतिं इति वाक्यस्य कोऽर्थः?**

**उत्तरम्–** अनूरुः अरुः सम्पद्यते तत्करोतिं।

**प्रश्नः १२७– नित्यवीप्सयोः सूत्रस्य कोऽर्थः?**

**उत्तरम्–** आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्विर्वचनं भवति।

**प्रश्नः १२८– नित्यपदार्थः कः?**

**उत्तरम्–** आभीक्ष्ण्यम् पौनः पुन्यरित्यर्थः।

**प्रश्नः १२९– परि–परि बङ्गेभ्यो वृष्टो देवः इति वाक्यस्य कोऽर्थः?**

**उत्तरम्–** बङ्गान् परिहृत्य वृष्टो देव इत्यर्थः।

**प्रश्नः १३०– अधोऽधोलोकमिति वाक्यस्य कोऽर्थः?**

**उत्तरम्–** लोकस्याधस्तात् समीपे देशे इत्यर्थः।

**प्रश्नः १३१– सुन्दर सुन्दर वृथा ते सौन्दर्यमित्यत्र कस्मिन्नर्थे द्वित्वम्?**

**उत्तरम्–** असूयार्थे।

**प्रश्नः १३२– चोर ! चार ! घातयिष्यामि त्वाम्। अत्र कस्मिन्नर्थे द्वित्वम्?**

**उत्तरम्–** भर्त्सनार्थे।

**प्रश्नः १३३– सर्प, सर्प इत्यत्र कस्मिन्नर्थे अनेकावृत्तिः?**

**उत्तरम्–** सम्भ्रमार्थे।

**प्रश्न:१३४– व्याकरण सूत्राष्टाध्यायी केन प्रणीता?**

**उत्तरम्**– महर्षिणा पाणिनिना।

**प्रश्न:१३५– सिद्धान्तकौमुद्याः प्रणेता कः?**

**उत्तरम्**– श्रीमद्भट्टोजिर्दीक्षितः।

**प्रश्न:१३६– सिद्धान्तकौमुद्यां सूत्राष्टाध्याय्याः कति सूत्राणि व्याख्यातानि?**

**उत्तरम्**– सर्वाणि सूत्राणि अष्टाध्याय्याः।

**प्रश्न:१३७– अष्टाध्यायां कति सूत्राणि सन्ति?**

**उत्तरम्**– ३९७८ सूत्राणि (अष्टसप्तत्युत्तरनवशतं त्रि सहस्रं च)।

**प्रश्न:१३८– सिद्धान्तकौमुद्यां कति प्रकरणानि सन्ति?**

**उत्तरम्**– चतुर्दश प्रकरणानि।

**प्रश्न:१३९– कौमुद्याः प्रकरणानां कानि नामानि सन्ति?**

**उत्तरम्**– (१) संज्ञाप्रकरणम्, (२) परिभाषा प्रकरणम्, (३) सन्धिप्रकरणम्, (४) सुबन्त प्रकरणम्, (५) अव्यय प्रकरणम्, (६) स्त्री प्रत्यय प्रकरणम्, (७) कारक प्रकरणम्, (८) समास प्रकरणम् (९) तद्धित प्रकरणम्, (१०) तिङन्त प्रकरणम्, (११) प्रक्रिया प्रकरणम्, (१२) कृदन्त प्रकरणम्, (१३) वैदिक प्रकरणम्, (१४) स्वर प्रकरणञ्च।

**प्रश्न:१४०– कस्य प्रदेशस्य निवास्यासीत् श्रीमद् भट्टोजिदीक्षितः?**

**उत्तरम्**– केषाञ्चन मतानुसारेणायं महाराष्ट्रप्रदेशस्य केषाञ्चनमतानुसारेण चायमान्ध्रदेशीय आसीत्।

**प्रश्न:१४१– श्रीमद्भट्टोजिदीक्षितः सिद्धान्तकौमुद्याः कां व्याख्यां चकार?**

**उत्तरम्**– प्रौढमनोरमाम्।

**प्रश्न:१४२– श्रीमद्भट्टोजि दीक्षितस्य कालः कः?**

**उत्तरम्**– वैक्रामाब्दस्य षोडशशताब्दस्य पूर्वार्द्धः।

**प्रश्न:१४३– भट्टोजिदीक्षितस्य पितुर्नाम किमासीत्?**

**उत्तरम्**– श्रीमल्लक्ष्मीधरदीक्षितः।

**प्रश्न:१४४– भट्टोजिदीक्षितस्य भ्रातुर्नाम किम्?**

**उत्तरम्**– रङ्गोजिभट्टः।

**प्रश्न:१४५– भट्टोजिदीक्षितस्य कति पुत्रा आसन्?**

**उत्तरम्**– द्वौ पुत्रौ।

**प्रश्नः१४६– भट्टोजिदीक्षितस्य पुत्रयोः नाम किम्?**

**उत्तरम्–** भानुजिदीक्षितवीरेश्वरौ।

**प्रश्नः१४७– भट्टोजिदीक्षितस्य पौत्रस्य नाम किम्?**

**उत्तरम्–** हरिदीक्षितः।

**प्रश्नः१४८– भट्टोजिदीक्षितः स्वनिवास वसतिं कां चकार?**

**उत्तरम्–** वाराणसीम्।

**प्रश्नः१४९– भट्टोजिदीक्षितस्य गुरोर्नाम किमासीत्?**

**उत्तरम्–** श्रीशेषकृष्णः।

**प्रश्नः१५०– भट्टोजिदीक्षितकृताः के ग्रन्थाः सन्ति व्याकरण शास्त्रस्य?**

**उत्तरम्–** (१) सिद्धान्तकौमुदी, (२) प्रौढमनोरमा, (३) शब्दकौस्तुभः, (४) वैयाकरण भूषणकारिकाश्च।

**प्रश्नः१५१– सिद्धान्तकौमुद्याः प्रसिद्धे व्याख्ये के द्वे स्तः?**

**उत्तरम्–** तत्त्वबोधिनी बालमनोरमा च।

**प्रश्नः१५२– तत्त्वबोधिन्याः प्रणेता कः?**

**उत्तरम्–** श्रीमज्ज्ञानेन्द्र सरस्वती।

**प्रश्नः१५३– बालमनोरमायाः रचयिता कः?**

**उत्तरम्–** श्री वासुदेव दीक्षितः।

**प्रश्नः१५४– श्रीवासुदेवदीक्षितस्य पितुः नाम किम्?**

**उत्तरम्–** श्रीमहादेव वाजपेयी।

**प्रश्नः१५५– श्रीवासुदेवदीक्षितस्य मातुर्नाम किम्**

**उत्तरम्–** श्रीमत्यन्नपूर्णा।

**प्रश्नः१५६– कौमुद्याः समास प्रकरणे कति उपप्रकरणानि सन्ति?**

**उत्तरम्–** नव उपप्रकरणानि।

**प्रश्नः१५७– कौमुद्याः समास प्रकरणस्य कानि नव उपप्रकरणानि सन्ति?**

**उत्तरम्–** (१) अव्ययी भाव समास प्रकरणम्,(२) तत्पुरुष समास प्रकरणम्, (३) बहुव्रीहिसमास प्रकरणम्, (४) द्वन्द्व समास प्रकरणम्, (५) एक शेष प्रकरणम्, (६) सर्वसमास शेष प्रकरणम्, (७) अलुक् समास प्रकरणम्, (८) सर्वसमासान्त प्रकरणम्, (९) समासाश्रय विधिप्रकरणञ्च।



श्रीभट्टोजिदीक्षितविरचित

# वैयाकरणसिद्धान्तकौमुदी

## 'श्रीधरमुखोल्लासिनी' विस्तृत हिन्दी व्याख्या

(प्रत्येक सूत्रों में पदप्रदर्शन, समास, अनुवृत्तिक्रम, सूत्रार्थ, भाष्य-मनोरमा-शेखर के अनुसार विस्तृत एवं सुगम व्याख्या, प्रयोगसिद्धि, सभी धातुओं के प्रत्येक लकारों के रूप, क्लिष्ट रूपों की सिद्धि एवं धातुपाठ सहित धातुप्रकरण का विशिष्ट विवेचन)

**व्याख्याकार : श्रीगोविन्दाचार्य**

प्रस्तुत व्याख्याग्रन्थ की सबसे बड़ी विशेषता यह है कि 30 वर्षों से छात्रों को अध्यापन कराते समय ग्रन्थस्थ कठिन विषयों को सरलता से समझाने की जो प्रयोगात्मक शैली अपनायी गयी है उसी शैली को लेखक ने यहाँ लिखित रूप में परिणित किया है। तात्पर्य यह है कि आज के इस वैज्ञानिक युग में प्रत्येक विषयों को वैज्ञानिक ढ़ंग से समझाने से ही कठिन से कठिन विषय भी छात्र शीघ्र ग्रहण कर सकता है। अतः परम्परा से कठिन रूप में ग्रहण किए जाने वाले इस संस्कृत-व्याकरण को युगसापेक्ष अत्यन्त सरल एवं सुबोध बनाया है।

प्रस्तुत टीका में सूत्रों की व्याख्या करते समय सबसे पहले समास, उसके बाद विभक्ति, तदनन्तर अनुवृत्ति और अधिकार, उसके बाद बोल्ड अक्षरों में सूत्रार्थ दिये गये हैं। आवश्यक स्थलों पर सूत्रों का विशेष विवरण दिया गया है एवम् उसके बाद रूप-सिद्धि दिखाई गई है।

प्रस्तुत संस्करण के प्रारम्भ में क्रिया के सम्बन्ध में अवश्यज्ञातव्य विषयों का विस्तारपूर्वक निरूपण किया गया है। जैसे कि सकर्मक और अकर्मक की व्यवस्था, फल और व्यापार का स्पष्टीकरण, कर्त्ता, कर्म, काल, परस्मैपद और आत्मनेपद आदि। अधिक से अधिक प्रयोगसिद्धि के साथ विशेष प्रचलित धातुओं के सभी रूप और शेष धातुओं के प्रत्येक लकारों में कम से कम एक-एक रूप अवश्य दिये गये हैं। **सम्पूर्ण सात भाग में**

◆ **प्रथम भाग** (प्रारम्भ से अव्ययान्त प्रकरण) ◆ **द्वितीय भाग** (स्त्रीप्रत्यय, कारक एवं समास प्रकरण) ◆ **तृतीय भाग** (सम्पूर्ण तद्धित प्रकरण) ◆ **चतुर्थ भाग** (दशगणी-भ्वादि से चुरादि प्रकरण) ◆ **पंचम भाग** (णिच्प्रकरण से लकारार्थ प्रकरण) ◆ **षष्ठ भाग** (उणादि सहित कृदन्त प्रकरण) ◆ **सप्तम भाग** (स्वरवैदिकी एवं लिङ्गानुशासन प्रकरण)

# वैयाकरणसिद्धान्तकौमुदी

अष्टाध्यायीसूत्रपाठ-वार्तिकपाठ-गणपाठ-धातुपाठ-पाणिनीयशिक्षा-लिङ्गानुशासन-परिभाषापाठ-सूत्रवार्तिकगणसूत्रधातुपरिभाषोणादि-सूत्रानुक्रमणिकासंवलिता

**( मूलमात्रम् )** **सम्पादकः श्रीगोविन्दाचार्यः**